# कात्यायनशुल्बसूत्र

रज्जुसमासं वक्ष्यामः १ समे शङ्कुं निखाय शङ्कुसम्मितया रज्ज्वा मण्डलं परिलिख्य यत्र लेखयोः शङ्क्वग्रच्छाया निपतति तत्र शङ्कू निहन्ति सा प्राची । तदन्तरं रज्ज्वाभ्यस्य पाशौ कृत्वा शङ्क्वोः पाशौ प्रतिमुच्य दक्षिणायम्य मध्ये शङ्कुमेवमुत्तरतः सोदीची २ रज्ज्वन्तयोः पाशौ करोति । श्रोण्यंसनिरञ्छनसंख्यासमासभङ्गेषु लक्षणानि । प्राच्यन्तयोः शङ्कू निहन्ति । श्रोण्योरंसयोश्च । शङ्क्वोः पाशौ प्रतिमुच्य निरञ्छनेन गृहीत्वा दक्षिणपूर्वां दिशं हरन्ति । एवमुत्तरतः । विपर्यस्येतरतः । स समाधिः सर्वत्र ३ प्रमाणमभ्यस्याभ्यासचतुर्थे लक्ष्णं करोति तन्निरञ्छनम् । अक्ष्णया तिर्यङ्मानीशेष ४ प्रमाणार्धं वाभ्यस्याभ्यासषष्ठे लक्षणं करोति तन्निरञ्छनम् । अक्ष्णया तिर्यङ्मानिशेषः ५ प्रमाणार्धे समचतुरश्रस्य शङ्कुः । शास्त्रवदर्धे दीर्घचतुरश्रस्य । शकटमुखस्य चैवम् ६ एतेन प्राग्वंशवेदिमानानि व्याख्यातानि । शालामानं च । तत्रोदीची प्राचीवत् । सदसश्चैवम् ७ अपरिमितं प्रमाणाक्षूयः ८ प्रमाणे शास्त्रं प्रमाणं निर्हासविवृद्धयोः । योगश्च ९ इतरस्यवितृतीये दक्षिणत इत्येतद्वक्ष्यामः । गार्हपत्याहवनीययोरन्तरालं षढ्धा सप्तधा वागन्तुसमं त्रेधा विभज्यापरवितृतीयलक्षणेन दक्षिणायम्य तस्मिन्नग्निः । विपर्यस्योत्तरत उत्करः १० अपिवान्तरत्रिभागोऽनया रज्ज्वा पुर्वार्धे समचतुरश्रं कृत्वा श्रोण्यामग्निः । विपर्यस्योत्तरांस उत्करः ११ १

अङ्गुलै रथसंमितायाः प्रमाणम् । तत्राष्टाशीतिशतमीषा । चतुःशतमक्षः । षडशीतिर्युगम् । चत्वारोऽष्टकाः शम्या १ पैतृक्यां द्विपुरुषं समचतुरश्रं कृत्वा करणीमध्ये शङ्कवः स समाधिः २ करणी तत्करणी तिर्यङ्मानी पार्श्वमान्यक्ष्णया चेति रज्जवः ३ पदं तिर्यङ्मानी त्रिपदा पार्श्वमानी तस्याक्ष्णया रज्जुर्दशकरणी ४ एवं द्विपदा तिर्यङ्मानी षट्पदा पार्श्वमानी तस्याक्ष्णया रज्जुश्चत्वारिंशत्करणी ५ उपदिष्टं युगप्रमाणं

शम्याप्रमाणं च दर्शनात् ६ दीर्घचतुरश्रस्याक्ष्णया रज्जुस्तिर्यङ्मानी पार्श्वमानी च यत्पृथग्भूते कुरुतस्तदुभयं करोतीति क्षेत्रज्ञानम् ७ सम-चतुरश्रस्याक्ष्णया रज्जुर्द्विकरणी ८ करणीं तृतीयेन वर्धयेत्तच्च स्वचतुर्थेनात्मचतुस्त्रिंशोनेन सविशेष इति विशेषः ९ प्रमाणं तिर्यक् द्विकरण्यायामस्तस्याक्ष्णया रज्जुस्त्रिकरणी १० तृतीयकरण्येतेन व्या-ख्याता । प्रमाणविभागस्तु नवधा करणीतृतीयं नवभागः । नवभा-गास्त्रयस्तृतीयकरणी ११ सौत्रामण्यां प्रक्रमार्था । तृतीयकरणी समा-सार्था १२ तुल्यप्रमाणानां समचतुरस्राणामुक्तः समासः । नाना-प्रमाणसमासे ह्रसीयसः करण्या वर्षीयसोऽपच्छिन्द्यात्तस्याक्ष्णया रज्जु-रुभे समस्यतीति समासः १३ २

चतुरश्राच्चतुरश्रं निर्जिहीर्षन्यावन्निर्जिहीर्षेत्तावदुभयतोऽपच्छिद्य शङ्कू निखाय पार्श्वमानीं कृत्वा पार्श्वमानीसम्मितामक्ष्णयां तत्रोपसंहरति स समासेऽपच्छेदः सा करण्येष निर्ह्रासः १ दीर्घचतुरश्रं समचतुरश्रं चिकीर्षन् मध्ये तिर्यगपच्छिद्यान्यतरद्विभज्येतरत्पुरस्ताद्दक्षिणतश्चोपद-ध्याच्छेषमागन्तुना पुरयेत्तस्योक्तो निर्ह्रासः २ अतिदीर्घं चेत्तिर्यङ्मा-न्यापच्छिद्यापच्छिद्यैकसमासेन समस्य शेषं यथायोगमुपसंहरेदित्येकः समासः ३ समचतुरश्रं दीर्घचतुरश्रं चिकीर्षन्मध्येऽक्ष्णयाऽपच्छिद्य तच्च विभज्यान्यतरत्पुरस्तादुत्तरतश्चोपदध्याद्विषमं चेद्यथायोगमुपसंहरेदिति व्यासः ४ प्रमाणं चतुरश्रमादेशादन्यत् ५ द्विप्रमाणा चतुःकरणी त्रिप्र-माण नवकरणी चतुःप्रमाणा षोडशकरणी ६ यावत्प्रमाणा रज्जुर्भवति तावन्तस्तावन्तो वर्गा भवन्ति तान्समस्येत् ७ अर्धप्रमाणेन पादप्रमाणं विधीयते । तृतीयेन नवमोंऽशः । चतुर्थेन षोडशी कला ८ एष निर्ह्रासस्तस्य पुरस्तादुक्तं शास्त्रम् ९ यावत्प्रमाणा रज्जुर्भवतीति विवृद्धे ह्रासो भवति १० चतुरश्रं मण्डलं चिकीर्षन्मध्यादंसे निपात्य पार्श्वतः परिलिख्य तत्र यदतिरिक्तं भवति तस्य तृतीयेन सह मण्डलं परिलिखेत् स समाधिः ११ मण्डलं चतुरश्रं चिकीर्षन् विष्कम्भं पञ्चदशभागान् कृत्वा द्वावुद्धरेच्छेषः करणी १२ ३

द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदुभयतः प्रउगः समुह्यपुरीष इत्यग्नयः १ द्रोणे यावानग्निः सपक्षपुच्छविशेषस्तावच्चतुरश्रं कृत्वा द्रोणदशमविभागो वृन्तमित्येके । तद्दशमेनापच्छिद्यापच्छिद्यैकसमासेन समस्य निर्हृत्य सर्वमग्निं तथाकृतिं कृत्वा पुरस्तात्पश्चाद्वोपदध्यात् । मण्डलेऽप्येवम् २ प्रउगे यावानग्निः सपक्षपुच्छविशेषस्तावद्द्विगुणं चतुरश्रं कृत्वा यः पुरस्तात्करणीमध्ये शङ्कुर्यौ च श्रोण्योः सोऽग्निः ३ उभयतः प्रउगे तावदेव दीर्घचतुरश्रं कृत्वा करणीमध्येषु शङ्कवः स समाधिः ४ प्रउगं चतुरश्रं चिकीर्षन्मध्ये प्राञ्चमपच्छिद्य विपर्यस्येतरत उपधाय दीर्घचतुरश्रसमासेन समस्येत् स समाधिः ५ उभयतः प्रउगं चेन्मध्ये तिर्यगपच्छिद्य पूर्ववत्समस्येत् ६ एतेनैव त्रिकर्णसमासो व्याख्यातः । पञ्चकर्णानां च । प्रउगेऽपच्छिद्यैककर्णानां । द्विकर्णानां समचतुरश्रेऽपच्छिद्य ७ ४

उत्तरेषु पुरुषोच्चयेनैकशतविधादित्येतद्वक्ष्यामः १ आद्योऽग्निर्द्विगुणस्त्रिगुणो भवतीति सर्वसमासः २ एकविंशतिविधो भवतीति पुरुषाभ्यासः ३ पुरुषाभ्यासे यावानग्निः सपक्षपुच्छविशेषस्तावच्चतुरश्रं कृत्वा तस्मिन्पुरुषप्रमाणमवदध्यात् ४ समस्तं पञ्चदशभागान्कृत्वा द्वावेकसमासेन समस्येत् स पुरुषः ५ पञ्चविभागेन बृहती तस्य दशमविभागेन पादमात्री भवति ६ पुरुषं वा पञ्चमेनोभयतोऽपच्छिद्य पञ्चविभागन्समस्य तृतीयं निर्हृत्य तस्मिन्पुरुषप्रमाणेऽवदध्यादित्यपरम् ७ पञ्चदशविभागोऽष्टाङ्गुलम् ८ पञ्चारत्निर्दशवितस्तिर्विंशतिशताङ्गुलः पुरुष इत्येतस्माद्द्वादशाङ्गुलं पदमिति च ९ पुरुषं वा सप्तमेनोभयतोऽपच्छिद्य सप्तभागान्समस्य ससप्तमभागमङ्गुलं निर्हृत्य पुरुषप्रमाणेऽवदध्यादित्यपरम् १० नारत्निवितस्तीनां समासो विद्यते संख्यायोगादिति श्रुतेः ११ ५

यथाग्नि वेदीष्टकाप्रमाणं वर्द्धत इत्येतद्वक्ष्यामः १ याकरणी चतुर्दशप्रक्रमान्सङ्क्षिपति त्रिंश्च प्रक्रमसप्तमभागान् स एकशतविधे प्रक्रमः २

द्वितीये वा सप्तसु प्रक्रमेषु प्रक्रममवधाय तस्य सप्तमभागेन प्रक्रमार्थः ३ प्रक्रमेण वा सप्तमभागेन प्रक्रमार्थः ४ एवमैकशतविधात् ५ नान्तःपात्यगार्हपत्ययोर्वृद्धिर्भवति तावदेव योनिर्भवति न वै जातं गर्भं योनिरनुवर्धत इति श्रुतेर्वृद्धेरत्यन्तं प्रतिषेधः ६ यावत्प्रमाणानि समचतुरश्राण्येकीकर्तुं चिकीर्षेदेकोनानि तानि भवन्ति तिर्यग्द्विगुणान्येकत एकाधिकानि त्र्यस्रिर्भवति तस्येषुस्तत्करोति ७ यथायूपं वेदिवर्द्धनमित्येतद्व्यामः ८ या रज्जुरेकादशोपरवान्सङ्क्षिपति दश च रथाक्षांस्तस्या यश्चतुर्विंशो भागः स प्रक्रमः ९ तेन वेदिं निर्माय द्वादशाङ्गुलं पुरस्तादपच्छिद्य तद्यूपावत्याच्छङ्कोः पुरस्तात्प्राञ्चमवधाय तस्मिन् यूपान्मिनोति १० पार्श्वयोर्वाऽर्धमन्तर्वेदीति श्रुतेरर्द्धकानिति ११ एके प्रथमोत्तमौ प्रकृतिवत् १२ सैषा शिखण्डिनी वेदिः १३ ६

भवन्ति चात्र श्लोकाः--
द्विहस्ते लक्षणं कुर्यात् त्रिहस्तो मध्यमः शिरः १

शिरःपश्चाद्वितस्तिः स्यात् पूर्वार्धे हस्त एव च
सार्धहस्ते च पाशः स्यात् वेदिः स्यात् पौर्णमासिकी २

संख्याज्ञः परिमाणज्ञः समसूत्रनिरञ्छकः
समभूमौ भवेद्विद्वाञ्छुल्बवित् परिपृच्छकः ३

न जलात् सममन्यत् स्यान्नान्यद्वातात् प्रमा भवेत्
नान्यद्दूरं भ्रमादूर्ध्वं नान्यत् सूत्रादृजुर्भवेत् ४

तिर्यङ्मान्याश्च सर्वार्थैः पार्श्वमान्याश्च योगवित्
करणीनां विभागज्ञो नित्योद्युक्तश्च कर्मसु ५

शास्त्रबुध्या विभागज्ञः परशास्त्रकुतूहलः
शिल्पिभ्यः स्थपतिभ्यश्च आददीत मतीः सदा ६

षडङ्गुलपरीणाहं द्वादशाङ्गुलमुच्छ्रितम्

जरठं चाव्रणं चैव शङ्कुं कुर्याद्विशेषतः ७

द्विवितस्तिप्रमाणस्तु खादिरो मुद्गरस्तथा
शङ्कुस्तेन निखातव्यस्तस्मात्तस्य परिग्रहः ८

एकतस्तु ऋजुस्तीक्ष्णः खादिरः सममायतः
शङ्कुः कार्यस्तु शुल्बज्ञैस्तस्यार्धं गमयेन्महीम् ९

प्रादेशमात्रो हविर्यज्ञे पूर्वलक्षणलक्षितः
शङ्कुरामशिराः कार्यस्तस्याप्यर्धं निखापयेत् १०

चतुरस्रमुद्गरं स्यात् षोडशाङ्गुलमायतम्
अविद्धं रमणीयं च दारुमध्याच्च निर्मितम् ११

अजीर्णाऽग्रन्थिनी सूक्ष्मा समा श्लक्ष्णा त्वरोमशा
रज्जुर्मानाधिका कार्या अध्वरे योगमिच्छता १२

शाणी वा बाल्वजी चैव वैणवी वा विधीयते
रज्जुस्तूभयतःपाशा त्रिवृता यज्ञकर्मणि १३

रज्जुर्मुञ्जमयी कार्या शणैस्तु परिमिश्रिता
कात्यायनो वदत्येवमखण्डा कुशबल्बजैः १४

नवके लक्षणं कुर्यात् त्रीणि कुर्यात् त्रिषु त्रिषु
उत्तमो नवकः पाशः सदसो मानमुच्यते १५

पञ्चदशमथैकविंशतिकमपरं परस्त्रिकं च
द्वादशसु पाश उत्तम इति सोमे रज्जुमानमेतत् १६

पदस्याक्ष्णया तिरश्ची तयोरक्ष्णया भवेत्
सौत्रामण्यां विमातव्या वेदिः स्यात् सोमवत्तया १७

नीहारेण घनैर्वापि ज्योतिषामभ्रदर्शने
अप्सु दीपं प्रगृह्णीयाद्यावत्तमसि दर्शने १८

प्रमाणं च प्रमेयं च यच्चान्यद्वस्तुसंज्ञकम्
सर्वं तच्छास्त्रतो ज्ञात्वा यज्ञे सिध्यन्ति याज्ञिकाः १९

यथा न क्षीयते मानं यथा च न विवर्धते
यथा च रमते दृष्टिस्तथा योगं समाचरेत् २०

अरत्निश्चतुरस्रस्तु पूवस्याग्नेः खरो भवेत्
रथचक्राकृतिः पश्चाच्चन्द्रार्ध इव दक्षिणः २१

अग्नीनां तु खरः कार्यो मेखलात्रयसंयुतः
द्वादशाङ्गुल उच्छ्राये विस्तारे चतुरङ्गुलः २२

तन्तुः पुष्करनालस्य षड्गुणः परिवेष्टितः
वत्सतर्यास्त्रिहायण्या बालेन सदृशो भवेत् २३

त्रयस्त्रिहायणीबालाः सर्षपार्धं प्रचक्षते
द्विगुणं सर्षपं विद्याद्यवः पञ्च तु सर्षपाः २४

अङ्गुलस्य प्रमाणं तु षड्यवाः पार्श्वसंस्थिताः
चतुर्विंशाङ्गुलोऽरत्निर्वितस्तिर्द्वादशाङ्गुला २५

व्यामस्यात्र प्रमाणं तु चतुर्न्यूनं शतं भवेत्
पुरुषस्य प्रमाणं वै विंशतिस्तु शताधिका २६

हिरण्यशकलार्थे तु हिरण्यं यस्य नोच्यते
कृष्णलेनैव तद्व्याख्या यज्ञे सिध्यति याज्ञिकी २७

कृष्णलं त्रियवं मानं ताम्रायसमतः परम्
सुवर्णादर्धं च माषाणां सुवर्णाश्च त्रिसप्ततिः २८

त्रीणि चैव सहस्राणि दद्याद्बहुसुवर्णके
भूयः स्थपतितो ज्ञात्वा संज्ञास्वन्यासु मानवित्
स्वर्णकारो यथाऽभ्यासात्तथा भूयो विवर्धते २९

ह्रसते शोषपाकाभ्यां द्वात्रिंशद्भागमिष्टका
तस्मादार्द्रप्रमाणं तु कुर्यान्मानाधिकं बुधः ३०

अज्ञात्वा शुल्बसद्भावं यज्ञे सौत्रामणीसुते
वेदिं ये कर्तुमिच्छन्ति गिरिं भिन्दन्ति ते नखैः ३१

दण्डरज्ज्वर्धमभ्यस्य षष्ठे त्वर्धस्य लक्षणम्
तथैव चेतरत्रापि तिर्यङ्मानं यदृच्छया ३२

यावत्प्रमाणा रज्जुः स्यात्तावानेवागमो भवेत्
आगमार्धे भवेच्छङ्कुस्तदर्धे च निरञ्छनम् ३३

आधाने पदिकं कुर्यात् द्विपदः सौमिको भवेत्
अग्नौ च त्रिपदं कुर्यात् प्रक्रमं याज्ञिको बुधः ३४

कृत्तिका श्रवणः पुष्यश्चित्रास्वात्योर्यदन्तरम्
एतत्प्राच्या दिशो रूपं युगमात्रोदिते पुरः ३५

पञ्चाशच्छर्कराः पश्चात् पूर्वे देयास्त्रिसप्ततिः
दक्षिणे तु प्रदातव्या दश पञ्च च सप्त च ३६

शंस्यश्चतुर्विंशतिपार्श्वभागश्चतुर्दशभिः परिलेख्यस्तु नर्यम्
तथैव चाष्टद्विगुणैरथर्य्यस्त्रिंशद्भिरायम्य हरेत्तृतीयम् ३७

अग्नेरुदक्सार्धनवाङ्गुले मध्यं ततो लिखेत्
वृत्तमेकोनविंशत्या प्राचीज्या मध्यगा भवेत्
उदगर्धं विहायार्वाक् खराग्नेर्दक्षिणस्य तु ३८

सूत्रदोषदरिद्रस्य गूढमन्त्रस्य धीमतः
समाप्तेयं क्रिया शौल्बी कात्यायनमहात्मनः ३९

इति कात्यायनशुल्बसूत्र